तस्याभिषेकसम्भारान्दृष्ट्वा भार्याऽथ कैकेयी ॥1.1.21॥
पूर्वं दत्तवरा देवी वरमेनमयाचत ।
विवासनं च रामस्य भरतस्याभिषेचनम् ॥1.1.22॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

अथ तस्य अभिषेकसम्भारान् दृष्ट्वा पूर्वं दत्तवरा देवी कैकेयी रामस्य विवासनं भरतस्य अभिषेचनम् च एनं वरम् अयाचत ।

- अन्वयार्थः

अनन्तरं रामस्य अभिषेकप्रस्तुति विलोक्य पूर्वकाले लब्धवरा पत्नी देवी केकयराजपुत्री रामस्य निर्वासनं भरतस्य राज्याभिषेकं च दशरथं वरं प्रार्थितवती ।

तस्याभिषेकसम्भारान्दृष्ट्वा भार्याऽथ कैकेयी ॥1.1.21॥
पूर्वं दत्तवरा देवी वरमेनमयाचत ।
विवासनं च रामस्य भरतस्याभिषेचनम् ॥1.1.22॥

- पदपरिचयः
  - अभिषेकसम्भारान् – अभिषेकसम्भार – पुं, द्वितीया, बहुवचनम्।
  - तस्य, रामस्य, भरतस्य – तत्, राम, भरत – पुं, षष्ठी, एकवचनम्।
  - अथ, च – अव्ययम्।
  - दृष्ट्वा – कृदन्तम् अव्ययम्।
  - पूर्वं, विवासनं, अभिषेचनम् – पूर्व, विवासन, अभिषेचन – नपुं, द्वितीया, एकवचनम्।
  - वरम् – वर – पुं, द्वितीया, एकवचनम्।
  - एनम् – एतद् – पुं, द्वितीया, एकवचनम् (वैकल्पिकं रूपम्)।
  - दत्तवरा – दत्तवरा – स्त्री, प्रथमा, एकवचनम्।
  - देवी, कैकेयी - देवी, कैकेयी – स्त्री, प्रथमा, एकवचनम्।
  - अयाचत – याचृ- याञ्चायाम्, कर्तरि, लङ्, प्रथमपुरुषः, एकवचनम्।

स सत्यवचनाद्राजा धर्मपाशेन संयतः ।
विवासयामास सुतं रामं दशरथः प्रियम् ॥1.1.23॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  सत्यवचनात् धर्मपाशेन संयतः सः राजा दशरथः प्रियं सुतं रामं विवासयामास।

- अन्वयार्थः

  सत्यप्रतिज्ञत्वात् धर्मबन्धनेन बद्धः सः नृपः दशरथः अतिप्रियं पुत्रं रामं निर्वासयामास।

स सत्यवचनाद्राजा धर्मपाशेन संयतः ।
विवासयामास सुतं रामं दशरथः प्रियम् ॥1.1.23॥

- पदपरिचयः
  - सः – तद् – पुं, प्रथमा, एकवचनम्।
  - सत्यवचनात् – सत्यवचन – पुं, पञ्चमी, एकवचनम्।
  - धर्मपाशेन – धर्मपाश – पुं, तृतीया, एकवचनम्।
  - राजा – राजन् – पुं, प्रथमा, एकवचनम्।
  - दशरथः, संयतः – दशरथ, संयत – पुं, प्रथमा, एकवचनम्।
  - प्रियं, सुतं, रामम् – प्रिय, सुत, राम – पुं. द्वितीया, एकवचनम्।
  - विवासयामास - वि+वस्+णिच्+कर्तरि, लिट्, प्रथमपुरुषः, एकवचनम्।

स जगाम वनं वीरः प्रतिज्ञामनुपालयन् ।
पितुर्वचननिर्देशात्कैकेय्याः प्रियकारणात् ॥1.1.24 ॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  सः वीरः पितुः वचननिर्देशात् कैकेय्याः प्रियकारणात् प्रतिज्ञाम् अनुपालयन् वनं जगाम ।

- अन्वयार्थः

  असौ शूरः भरतमातुः प्रियहेतोः जनकस्य आज्ञया प्रतिज्ञाम् अनुसरन् विपिनम् अगमत् ।

स जगाम वनं वीरः प्रतिज्ञामनुपालयन्।
पितुर्वचननिर्देशात्कैकेय्याः प्रियकारणात् ॥1.1.24॥

- पदपरिचयः
  - सः – तद् – (सर्वनाम) पुं, प्रथमा, एकवचनम्।
  - वीरः – वीर – पुं, प्रथमा, एकवचनम्।
  - वनम् – वन – नपुं, द्वितीया, एकवचनम्।
  - प्रतिज्ञाम् – प्रतिज्ञा – स्त्री, द्वितीया, एकवचनम्।
  - पितुः – पितृ – पुं,षष्ठी, एकवचनम्।
  - वचननिर्देशात् - वचननिर्देश – पुं, पञ्चमी – एकवचनम्।
  - कैकेय्याः – कैकेयी – स्त्री, षष्ठी, एकवचनम्।
  - प्रियकारणात् – प्रियकारण – नपुं, पञ्चमी, एकवचनम्।
  - अनुपालयन् – अनुपालयत् – पुं, प्रथमा, एकवचनम्।
  - जगाम – गमलृ – गतौ, कर्तरि, लिट्, प्रथमपुरुषः,एकवचनम्।

तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह ।
स्नेहाद्विनयसम्पन्नस्सुमित्रानन्दवर्धनः ॥1.1.25॥
भ्रातरं दयितो भ्रातुस्सौभ्रात्रमनुदर्शयन् ।

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

विनयसम्पन्नः सुमित्रानन्दवर्धनः भ्रातुः दयितः भ्राता लक्ष्मणः स्नेहात् सौभ्रात्रम् अनुदर्शयन् तं व्रजन्तं भ्रातरम् अनुजगाम ।

- अन्वयार्थः

विनम्रः सुमित्राप्रीतिविवर्धकः अग्रजस्य रामस्य प्रियः इष्टः अनुजः लक्ष्मणनामा उत्तमभ्रातृभावम् आचरन् अनुरागात् गच्छन्तं रामम् अग्रजम् (रामम्) अनुययौ ।

तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह ।
स्नेहाद्विनयसम्पन्नस्सुमित्रानन्दवर्धनः ॥1.1.25॥
भ्रातरं दयितो भ्रातुस्सौभ्रात्रमनुदर्शयन् ।

- पदपरिचयः
  - तम् – तद् – (सर्वनाम) पुं, द्वितीया, एकवचनम्।
  - व्रजन्तम् – व्रजत् - पुं, द्वितीया, एकवचनम्।
  - प्रियः, विनयसम्पन्नः, सुमित्रानन्दवर्धनः, दयितः – प्रिय, विनयसम्पन्न, सुमित्रानन्दवर्धन, दयित – पुं, प्रथमा, एकवचनम्।
  - भ्राता – भ्रातृ – पुं,प्रथमा, एकवचनम्।
  - भ्रातरम् – भ्रातृ – पुं, द्वितीया, एकवचनम्।
  - भ्रातुः – भ्रातृ – पुं, षष्ठी, एकवचनम्।
  - सौभ्रात्रम् – सौभ्रात्र – नपुं, द्वितीया, एकवचनम्।
  - ह – अव्ययम्।
  - अनुदर्शयन् – अनुदर्शयत् – पुं, प्रथमा, एकवचनम्।
  - स्नेहात् – स्नेह – पुं, पञ्चमी, एकवचनम्।
  - अनुजगाम – अनु+गमऌ – गतौ, कर्तरि, लिट्, प्रथमपुरुषः, एकवचनम्।

रामस्य दयिता भार्या नित्यं प्राणसमा हिता ॥1.1.26॥
जनकस्य कुले जाता देवमायेव निर्मिता ।
सर्वलक्षणसम्पन्ना नारीणामुत्तमा वधूः ॥1.1.27॥
सीताप्यनुगता रामं शशिनं रोहिणी यथा ।

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

जनकस्य कुले जाता देवमाया इव निर्मिता रामस्य दयिता नित्यं प्राणसमा हिता भार्या सर्वलक्षणसम्पन्ना नारीणाम् उत्तमा वधूः सीता अपि यथा शशिनं रोहिणी (तथा) रामम् अनुगता।

- अन्वयार्थः

मिथिला-नृपस्य वंशे उत्पन्ना मोहिनी इव कृता राम-प्रिया सर्वदा प्राणतुल्या हितकारिणी पत्नी सर्वशुभलक्षणोपेता स्त्रीणां श्रेष्ठा स्नुषा जानकी अपि रोहिणी चन्द्रमिव रामम् अनुयाता।

रामस्य दयिता भार्या नित्यं प्राणसमा हिता ॥1.1.26॥
जनकस्य कुले जाता देवमायेव निर्मिता ।
सर्वलक्षणसम्पन्ना नारीणामुत्तमा वधूः ॥1.1.27॥
सीताप्यनुगता रामं शशिनं रोहिणी यथा ।

- पदपरिचयः
  - रामस्य, जनकस्य – राम, जनक – पुं, षष्ठी, एकवचनम्।
  - दयिता, भार्या, प्राणसमा, हिता, जाता, देवमाया, निर्मिता, सर्वलक्षणसम्पन्ना, उत्तमा, सीता, अनुगता - दयिता, भार्या, प्राणसमा, हिता, जाता, देवमाया, निर्मिता, सर्वलक्षणसम्पन्ना, उत्तमा, सीता, अनुगता – स्त्री, प्रथमा, एकवचनम्।
  - नित्यम्, अपि, इव, यथा – अव्ययम्।
  - कुले – कुल – पुं, प्रथमा, एकवचनम्।
  - नारीणाम् – नारी – स्त्री, षष्ठी, बहुवचनम्।
  - वधूः – वधू – स्त्री, प्रथमा, एकवचनम्।
  - रामम् – राम – पुं, द्वितीया, एकवचनम्।
  - शशिनम् – शशिन् - पुं, द्वितीया, एकवचनम्।
  - रोहिणी – रोहिणी – स्त्री, प्रथमा, एकवचनम्।